गङ्गास्तुती गङ्गादशहरास्तोत्रम् च
श्रीगणेशायनमः ।
ईश्वर उवाच ।
चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिताम् ।
रत्नकुम्भसिताम्भोजवरदाभयसत्कराम् ॥ १॥

श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम् ।
एवं ध्यायेत्सुसौम्यां च चन्द्रायुतसमप्रभाम् ॥ २॥

चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम् ।
सुप्रसन्नां च वरदां करुणार्द्रनिरन्तराम् ॥ ३॥

सुधाप्लावितभूपृष्ठां दिव्यगन्धानुलेपनाम् ।
त्रैलोक्यनमितां गङ्गां सर्वदेवैरभिष्टुताम् ॥ ४॥

दिव्यरत्नविभूषां च दिव्यमाल्यैर्विभूषिताम् ।
ध्यात्वा जले यथाप्रोक्तं तथाचार्यां च पूजयेत् ॥ ५॥

ॐ नमो भगवत्यै ऐं श्रीं ह्रीं हिलि हिलि मिलि मिलि
गङ्गे मां पावय पावय स्वाहा ।
अनेन मन्त्रेण आगमोक्तेन पञ्चपुष्पाञ्जलिं श्रीगङ्गायै निवेदयेत् ।
मया हतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ।
दशांगं गुग्गुलं धूपं सुगन्धं च मनोहरम् ॥ ६॥

गृहाण मङ्गलं दीपं घृतवर्तिसमन्वितम् ।
चतुर्विधं च नैवेद्यं रसैः षड्भिः समन्वितम् ।
रुद्ररूपे! नमस्तेऽस्तु गृहाण वरदा भव ॥ ७॥

परदारपरद्रव्यपरद्रोहपराङ्मुखः
गङ्गा ब्रूते कदाऽऽगत्य मामयं पावयिष्यति ॥

इति वैश्वानरनारदसम्वादे दशपापहरायाः श्रीगङ्गाध्यानार्चनविधिः ।
एवं ध्यानार्चनं विधाय पश्चाज्जलान्तरे स्थित्वा, ज्येष्ठे मासि
सिते पक्षे प्रतिपदादिदशमीपर्यन्तं दशविधपापप्रणाशाय
प्रतिदिनमुत्तरोत्तरदिनवृद्धया दशहरास्तोत्रपाठमहं करिष्ये ।

अथ दशहरास्तोत्रप्रारम्भः ।
ब्रह्मोवाच --

नमः शिवायै गङ्गायै शिवदायै नमो नमः ।
नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः ॥ १॥

नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमो नमः ।
सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥ २॥

सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते ।
स्थाणुजङ्गमसम्भूतविषहन्त्र्यै नमो नमः ॥ ३॥

संसारविषनाहिन्यै जीवनायै नमो नमः ।
शान्तिसन्तानकारिण्यै नमस्ते शुद्धमूर्तये ॥ ४॥

सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्तये ।
भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः ॥ ५॥

भोगोपभोगदायिन्यै भोगवत्यै नमो नमः ।
मन्दाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ॥ ६॥

नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः ।
नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमो नमः ॥ ७॥

त्रिहूताशनसंस्थायै तेजोवत्यै नमो नमः ।
नन्दायै लिङ्गधारिण्यै नारायण्यै नमो नमः ॥ ८॥

नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ।
बृहत्यै ते नमस्तेऽस्तु लोकधात्र्यै नमो नमः ॥ ९॥

नमस्ते विश्वमित्रायै नन्दिन्यै ते नमो नमः ।
पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ॥ १०॥

परापरशताढ्यायै वरदायै नमो नमः ।
पाशजालनिक्र्^न्तिन्यै अभिन्नायै नमो नमः ॥ ११॥

शान्तायै च वरिष्ठायै वरदायै नमो नमः ।
उस्रायै सुखदोग्ध्र्यै च सञ्जीविन्यै नमो नमः ॥ १२॥

ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ।
प्रणतार्तिप्रभञ्जिन्यै जगन्मात्रे नमोऽस्तु ते ॥ १३॥

सर्वापत्प्रतिपक्षायै मङ्गलायै नमो नमः ।
शरणागतदीनार्तपरित्राणपरायणे ॥ १४॥

सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तुते ।
निर्लेपायै दुर्गहन्त्र्यै दक्षायै ते नमो नमः ॥ १५॥

परात्परतरे तुभ्यं नमस्ते मोक्षदे सदा ।
गङ्गे ममाग्रतो भूया गङ्गे मे देवि पृष्ठतः ॥ १६॥

गङ्गे मे पार्श्वयोरेहि त्वयि गङ्गेऽस्तु मे स्थितिः ।
आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते शिवे ॥ १७॥

त्वमेव मूलप्रकृतिस्त्वं हि नारायणः परः ।
गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ॥ १८॥

य इदं पठति स्तोत्रं भक्त्या नित्यं नरोऽपि यः ।
शृणुयाच्छ्रद्धया युक्तः कायवाक्चित्तसम्भवैः ॥ १९॥

दशधासंस्थितैर्दोषैः सर्वैरेव प्रमुच्यते ।
सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लियते ॥ २०॥

इमं स्तवं गृहे यस्तु लेखयित्वा विनिक्षिपेत् ।
नाग्निचोरभयं तत्र पापेभ्य्ऽपि भयं न हि ॥ २१॥

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
संहरेत्त्रिविधं पापं बुधवारेण संयुता ॥ २२॥

तस्यां दशम्यामेतच्च स्तोत्रं गङ्गाजले स्थितः ।
यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥ २३॥

सोऽपि तत्फलमाप्नोति गङ्गां सम्पूज्य यत्नतः ।
पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्तितम् ॥ २४॥

यथा गौरी तथा गङ्गा तस्माद्गौर्यास्तु पूजने ।
विधिर्यो विहितः सम्यक् सोऽपि गङ्गाप्रपूजने ॥२५॥

यथा शिवस्तथा विष्णुर्यथा विष्णुरुमा तथा ।

उमा यथा तथा गङ्गा चतूरूपन्न भिद्यते ॥२६॥

विष्णुरुद्रान्तरं यच्च श्रीगौर्योरन्तरं यथा ।
गङ्गागौर्यन्तरं चापि यो ब्रूते मूढधीस्तु सः ॥२७॥

रौरवादिषु घोरेषु नरकेषु पतत्यधः ।
अदत्तानामुपादानं हिंसा चैवाविधानतः ॥ २८॥

परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ।
पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ॥ २९॥

असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ।
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ॥ ३०॥

वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ।
एतानि दश पापानि हर त्वं मम जाह्नवि ॥ ३१॥

दशपापहरा यस्मात्तस्माद्दशहरा स्मृता ।
एतैर्दशविधैः पापैः कोटिजन्मसमुद्भवैः ॥ ३२॥

मुंच्यते नात्र सन्देहो ब्रह्मणो वचनं यथा ।
दशत्रिंशच्छ्रतान्सर्वान् पितॄनथ पितामहान् ॥ ३३॥

उद्धरत्येव संसारान्मन्त्रेणानेन पूजिता ।
ॐ नमो भगवत्यै दशपापहरायै गङ्गायै नारायण्यै रेवत्यै ।
शिवायै दक्षायै अमृतायै विश्वरूपिण्यै (विश्वमुख्यायै)
नन्दिन्यै ते नमो नमः ॥ ३४॥

ज्येष्ठे मासि सिते पक्षे दशम्य़ां बुधहस्तयोः ।
गरानन्दे व्यतीपाते कन्याचन्द्रे वृषे रवौ ।
दशयोगे च यः स्नात्वा सर्वपापैः प्रमुच्यते ॥ ३५॥

सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां
करधृतकलशोद्यत्सोत्पलामत्यभीष्टाम् ।
विधिहरिहररूपां सेन्दुकोटीरजुष्टां
कलितसितदुकूलां जाह्नवीं तां नमामि ॥ ३६॥

आदावादिपितामहस्य निगमव्यापारपात्रे जलं

पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥ ३७॥

विष्णुपादाब्जसम्भूते गङ्गे त्रिपथगामिनि ।
ब्रह्मद्रवेति विख्याते पापं मे हर जाह्नवि ॥ ३८॥

जाह्नवी सर्वतः पुण्या ब्रह्महत्यापहारिणी ।
वाराणस्यां विशेषेण गङ्गा चोत्तरवाहिनी ॥ ३९॥

गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ४०॥

इति स्कन्दे महापुराणे एकाशीति साहस्र्यां संहितायां तृतीये काशीखण्डे धर्माब्धिस्था गङ्गास्तुतिः अथवा श्रीगङ्गादशहरास्तोत्रं सम्पूर्णम् ।

अथागमोक्तं स्तोत्रं एवम् ।